# अथ यमस्मृतिः

श्रीगणेशायनमः

अथ प्रायश्चित्तवर्णनम्

अथातो ह्यस्य धर्मस्य प्रायश्चित्ताभिधायकम्
चतुर्णामपि वर्णानां धर्मशास्त्रं प्रवर्त्तते १
जलाग्न्युद्बन्धनभ्रष्टाः प्रब्रज्यानशनच्युताः
विषप्रपतनप्रायशस्त्रघातच्युताश्च ये २
सर्वे ते प्रत्यवसिताः सर्वलोकवहिष्कृताः
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन वा ३
उभयावसिताः पापा येऽग्राम्यशरणच्युताः
इन्दुद्वयेन शुध्यन्ति दत्त्वा धेनुं तथा वृषम् ४
गोब्राह्मणहनं दग्धा मृतमुद्बन्धनेन च
पाशं तस्यैव छित्त्वा तु तप्तकृच्छ्रं समाचरेत् ५
कृमिभिर्व्रणसंभूतैर्मक्षिकाश्चोपधातितः
कृच्छ्रार्द्धं संप्रकुर्वीत शक्त्या दद्यात्तु दक्षिणाम् ६
ब्राह्मणस्य मलद्वारे पूयशोणितसम्भवे
कृमिभुक्तव्रणे मौञ्जीहोमेन स विशुध्यति ७
यः क्षत्रियस्तथा वैश्यः शूद्रश्चाप्यनुलोमजः
ज्ञात्वा भुङ्क्ते विशेषेण चरेच्चान्द्रायणं व्रतम् ८
कुक्कुटाण्डप्रमाणन्तु ग्रासञ्च परिकल्पयेत्
अन्यथाहारदोषेण न स तत्र विशुध्यति ९
एकैकं वर्द्धयेच्छुक्ले कृष्णपक्षे च ह्रासयेत्
अमावास्यां न भुञ्जीत एष चान्द्रायणोविधिः १०
सुरान्यमद्यपानेन गोमांसभक्षणे कृते
तप्तकृच्छ्रञ्चरेद्विप्रस्यत्पापस्तु प्रणश्यति ११

प्रायश्चित्ते ह्युपक्रान्ते कर्ता यदि विपद्यते
पूतस्तदहरेवापि इहलोके परत्र च १२
यावदेकः पृथक् द्रव्यः प्रायश्चित्तेन शुध्यति
अपरास्ते न च स्पृश्यास्तेऽपि सर्वे विगर्हिताः १३
अभोज्याश्चाप्रतिग्राह्या असंपाठ्या विवाहिनः
पूयन्तेऽनुव्रते चीर्णे सर्वे ते ऋक्थभागिनः १४
ऊनैकादशवर्षस्य पञ्चवर्षात् परस्य च
प्रायश्चित्तं चरेद् भ्राता पिता वान्योऽपि बान्धवः १५
अतोबालतरस्यापि नापराधो न पातकम्
राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते १६
अशीतीर्यस्य वर्षाणि बालोवाप्यूनषोडशः
प्रायश्चित्तार्धमर्हन्ति स्त्रियोरोगिण एव च १७
अस्तंगतो यदा सूर्यश्चाण्डालरजकस्त्रियः
संस्पृष्टास्तु तदा कैश्चित् प्रायश्चित्तं कथं भवेत् १८
जातरूपं सुवर्णञ्च दिवानीतं च यज्जलम्
तेन स्नात्वा च पीत्वा च सर्वे ते शुचयः स्मृताः १९
दासनापितगोपालकुलमित्रार्द्धसीरिणः
एते शूद्रेषु भोज्यान्ना यश्चात्मनं निवेदयेत् २०
अन्नं शूद्रस्य भोज्यं वा ये भुञ्जन्त्यबुधा नराः
प्रायश्चित्तं तथा प्राप्तं चरेच्चान्द्रायणं व्रतम् २१
प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति
मासि मासि रजस्तस्याः पिता पिबति शोणितम् २२
माता चैव पिता चैव ज्येष्ठोभ्राता तथैव च
त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्बलाम् २३
यस्तां विवाहयेत् कन्यां ब्राह्मणो मदमोहितः
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः २४

वन्ध्या तु वृषली ज्ञेया वृषली तु मृतप्रजाः
शूद्री तु वृषली ज्ञेया कुमारी तु रजस्वला २५
यत् करोत्येकरात्रेण वृषलीसेवनाद् द्विजः
तद्भैक्ष्यभुग् जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति २६
स्ववृषं या परित्यज्यान्यवृषेण वृहस्पतिः
वृषली सा तु विज्ञेया न शूद्री वृषली भवेत् २७
वृषलीफेनपीतस्य निःश्वासोपहतस्य च
तस्याञ्चैव प्रसूतस्य निष्कृतिर्नैव विद्यते २८
श्वित्रकुष्ठी तथा चैव कुनखी श्यावदन्तकः
रोगी हीनातिरिक्ताङ्गः पिशुनोमत्सरस्तथा २९
दुर्भगो हि तथा षराडः पाषराडी वेदनिन्दकः
हैतुकः शूद्रयाजी च अयाज्यानाञ्च याजकः ३०
नित्यं प्रतिग्रहे लुब्धोयाचकोविषयात्मकः
श्यावदन्तोऽथ वैद्यश्च असदालापकस्तथा ३१
एते श्राद्धे च दाने च वर्जनीयाः प्रयत्नतः ३२
ततोदेवलकश्चैव भृतकोवेदविक्रयी
एते वर्ज्याः प्रयत्नेन एतद्धास्वतिरब्रवीत् ३३
एतान्नियोजयेद्यस्तु हव्ये कव्ये च कर्मणि
निराशाः पितरस्तस्य यान्ति देवामहर्षिभिः ३४
अग्रे माहिषिकं दृष्ट्वा मध्ये तु वृषलीपतिम्
अन्ते वार्धुषिकं दृष्ट्वा निराशाः पितरोगताः ३५
महिषीत्युच्यते भार्या या चैव व्यभिचारिणी
तान् दोषान् क्षमते यस्तु स वै माहिषिकः स्मृतः ३६
समार्घन्तु समुद्धृत्य महार्घं यः प्रयच्छति
स वै वार्धुषिकोनाम ब्रह्मवादिषु गर्हितः ३७
यावदुष्णं भवत्यन्नं यावद्भुञ्जन्ति वाग्यताः

अश्नन्ति पितरस्तावद्यावन्नोक्ता हविर्गुणाः  ३८
हविर्गुणा न वक्तव्याः पितरो यत्र तर्पिताः
पितृभिस्तर्पितैः पश्चाद्वक्तव्यं शोभनं हविः  ३९
यावतो ग्रसते ग्रासान् हव्यकव्येषु मन्त्रवित्
तावतोग्रसते पिण्डान् शरीरे ब्रह्मणः पिता  ४०
उच्छिष्टोच्छिष्टसंस्पृष्टः शुना शूद्रेण वा द्विजः
उपोष्य रजमीमेकां पञ्चगव्येन शुध्यति  ४१
अनुच्छिष्टेन संस्पृष्टे स्नानमात्रं विधीयते
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत्  ४२
यावद्विप्रा न पूज्यन्ते सम्भोजनहिरण्यकैः
तावच्चीर्णव्रतस्यापि तत्पापं न प्रणश्यति  ४३
यद्वेष्टितं काकबलाकचिल्लैरमेध्यलिप्तं तु भवेच्छरीरम्
गात्रे मुखे च प्रविशेच्च सम्यक् स्नानेन लेपोपहतस्य शुद्धिः  ४४
ऊर्ध्वं नाभेः करौ मुक्त्वा यदङ्गमुपहन्यते
ऊर्ध्वं स्नानमधःशौचं तन्मात्रेणैव शुध्यति  ४५
अभक्ष्याणामपेयानामलेह्यानाञ्च भक्षणे
रेतोमूत्रपुरीषाणां प्रायश्चित्तं कथं भवेत्  ४६
पद्मोडुम्बरविल्वाश्च कुशाश्वत्थपलाशकाः
एतेषामुदकं पीत्वा षड्रात्रेणैव शुध्यति  ४७
यः प्रत्यवसितोविप्रः प्रव्रज्याग्निर्निरापदि
अनाहिताग्निर्वर्त्तेत गृहित्वञ्च चिकीर्षति  ४८
आचरेत्त्रीणि कृच्छ्राणि चरेच्चान्द्रायणानि च
जातकर्मादिभिः प्रोक्तैः पुनः संस्कारमर्हति  ४९
तूलिका उपधानानि पुष्पं रक्ताम्बराणि च
तूलिका उपधानानि पुष्पं रक्ताम्बराणि च
शोषयित्वा प्रतापेन प्रोक्षयित्वा शुचिर्भवेत्  ५०

देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्
उपपत्तिमवस्थाञ्च ज्ञात्वा धर्मं समाचरेत् ५१
रथ्याकर्द्दमतोयानि नावायस तृणानि च
मारुतार्केण शुध्यन्ति पक्वेष्टकचितानि च ५२
आतुरे स्नानसम्प्राप्ते दशकृत्वोह्यनातुरः
स्नात्वा स्नात्वा स्पृशेत्तन्तु ततः शुध्येत आतुरः ५३
रजकश्चर्मकारश्च नटोवुरुड एव च
कैवर्त्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ५४
एषां गत्वा तु योषां वै तप्तकृच्छ्रं समाचरेत् ५५
स्त्रीणां रजस्वलानान्तु स्पृष्टास्पृष्टि यदा भवेत्
प्रायश्चित्तं कथं तासां वर्णे वर्णे विधीयते ५६
स्पृष्ट्वा रजस्वलां यान्तु सगोत्राञ्च सभर्त्तृकाम्
कामादकामतो वापि स्नात्वा कालेन शुध्यति ५७
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रजा तथा
कृच्छ्रेण शुध्यते पूर्वा शूद्रा पादेन शुध्यति ५८
स्पृष्ट्वा रजस्वलान्योन्यं क्षत्रिया शूद्रजा तथा
पादहीनं चरेत् पूर्वा पादार्द्धन्तु तथोत्तरा ५९
स्पृष्टा रजस्वलान्योन्यं वैश्यजा शूद्रजा तथा
कृच्छ्रपादं चरेत् पूर्वा तदर्द्धन्तु तथोत्तरा ६०
स्पृष्टा रजस्वला चैव श्वाजजम्बूकरासभैः
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुध्यति ६१
स्पृष्टा रजस्वला कैश्चिच्चाण्डालैररजस्वला
प्राजापत्येन कृच्छ्रेण प्राणायामशतेन च ६२
विप्रः स्पृष्टोनिशायाञ्च उदक्या पतितेन च
दिवानीतेन तोयेन स्नापयेच्चाग्निसन्निधौ ६३
दिवार्के रश्मिसंस्पृष्टं रात्रौ नक्षत्ररश्मिभिः

सन्ध्योभयोश्च सन्ध्यायाः पवित्रं सर्वदा जलम् ६४
अपः करनखस्पृष्टाः पिबेदाचमने द्विजः
सुरां पिबति सुव्यक्तं यमस्य वचनं यथा ६५
खातवाप्योस्तथा कूपे पाषाणैः शस्त्रघातनैः
यष्ट्या तु घातने चैव मृत्पिण्डे गोकुलेन च ६६
रोधने बन्धने चैव स्थापिते पुष्कले तथा
काष्ठे वनस्पतौ रोधसङ्कटे रज्जुवस्त्रयोः ६७
एतत्ते कथितं सर्वं प्रमादस्थानमुत्तमम्
यत्र यत्र मृता गावः प्रायश्चित्तं समाचरेत् ६८
दारुणा घातने कृच्छ्रं पाषाणैर्द्विगुणं भवेत्
अर्द्धकृच्छ्रन्तु खाते स्यात् पादकृच्छ्रन्तु पादपे ६९
शस्त्रघाते त्रिकृच्छ्राणि यष्टिघाते द्वयं चरेत् ७०
कृच्छ्रेण वस्त्रघातेऽपि गोघ्नश्चेति विशुध्यति
योवर्त्तयति गोमध्ये नदीकान्तारमन्तिके ७१
रोमाणि प्रथमे पादे द्वितीये श्मश्रु वापयेत्
तृतीये तु शिखा धार्या चतुर्थे सशिखं वपेत् ७२
न स्त्रीणां वपनं कुर्यात् न च सा गामनुव्रजेत्
न च रात्रौ वसेद्गोष्ठे न कुर्याद् वैदिकीं श्रुतिम् ७३
सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्
एवमेव तु नारीणां शिरसो वपनं स्मृतम् ७४
मृतकेन तु जातेन उभयोः सूतकं भवेत्
पातकेन तु लिप्तेन नास्य सूतकिता भवेत् ७५
चत्वारि खलु कर्माणि सन्ध्याकाले विवर्जयेत्
आहारं मैथुनं निद्रां स्वाध्यायञ्च चतुर्थकम् ७६
आहाराज्जायते व्याधिः क्रूरगर्भश्च मैथुने
निद्रा श्रियो निवर्त्तन्ते स्वाध्याये मरणं ध्रुवम् ७७

अज्ञानात्तु द्विजश्रेष्ठ वर्णानां हितकाम्यया
मया प्रोक्तमिदं शास्त्रं सावधानोऽवधारय ७८
इति यमप्रोक्तं धर्मशास्त्रं समाप्तम्

Reference:
*Smṛti Sandarbha*, Vol. II, (Delhi: Nag, 1981), pp. 2083ff.